# ॥ श्रीमूकाम्बिकास्तोत्रम् ॥

मूलाम्भोरुहमध्यकोणविलसत् बन्धूकरागोज्ज्वलां
ज्वालाजालजितेन्दुकान्ति लहरीं आनन्दसन्दायिनीम् ।
हेलालालितनीलकुन्तलधरां नीलोत्पलाभांशुकां
कोल्लूराद्रिनिवासिनीं भगवतीं ध्यायामि मूकाम्बिकाम् ॥ १॥

बालादित्य निभाननां त्रिनयनां बालेन्दुनाभूषितां
नीलाकारसुकेशिनीं सुललितां नित्यान्नदानप्रदाम् ।
शङ्खञ्चक्रगदाऽभयं च दधतीं सारस्वतार्थप्रदां
तां बालां त्रिपुरां शिवेनसहितां ध्यायामि मूकाम्बिकाम् ॥ २॥

मध्यान्हार्कसहस्रकोटिसदृशां मायान्धकारस्थितां
मायाजालविराजितां मदकरीं मारेण संसेविताम् ।
शूलम्पाशकपालपुस्तकधरां शुद्धार्थविज्ञानदां
तां बालां त्रिपुरां शिवेनसहितां ध्यायामि मूकाम्बिकाम् ॥ ३॥

सन्ध्यारागसमाननां त्रिनयनां सन्मानसैः पूजितां
चक्राक्षाभयकम्बुशोभितकरां प्रालम्बवेणीयुताम् ।
ईशत्फुल्लसुकेतकीवरदलैरभ्यर्चितां तां शिवां
तां बालां त्रिपुरां शिवेनसहितां ध्यायामि मूकाम्बिकाम् ॥ ४॥

चन्द्रादित्यसमानकुण्डलधरां चन्द्रार्ककोटिप्रभां
चन्द्रार्काग्निविलोचनां शशिमुखीं इन्द्रादिसंसेविताम् ।
भक्ताभीष्टवरप्रदां त्रिनयनां चिन्ताकुलध्वंसिनीं
मन्त्राराादि वने स्थितां मणिमयीं ध्यायामि मूकाम्बिकाम् ॥ ५॥

कल्याणीं कमलेक्षणां वरनिधिं वन्दारुचिन्तामणिं
कल्याणाचलसंस्थितां घनकृपां मायां महावैष्णवीम् ।
कल्यां कम्बुसुदर्शनाऽभयकरां शम्भुप्रियां कामदां
कल्याणीं त्रिपुरां शिवेन सहितां ध्यायामि मूकाम्बिकाम् ॥ ६॥

कालाम्भोधरकुण्डलाञ्चितमुखां कर्पूरवीटीयुतां
कर्णालम्बितहेमकुण्डलधरां माणिक्यकाञ्चीधराम् ।
कैवल्यैकपरायणां कलमुखीं पद्मासने संस्थितां
तां बालां त्रिपुरां शिवेनसहितां ध्यायामि मूकाम्बिकाम् ॥७॥

नानाकाञ्चिविचित्रवस्त्रसहितां नानाविधैर्भूषितां

नानापुष्पसुगन्धमाल्यसहितां नानाजनासेविताम् ।
नानावेदपुराणशास्त्रविनुतां नानाकलिद्रप्रथां
नानारूपधरां महेशमहिषीं ध्यायामि मूकाम्बिकाम् ॥ ८॥

राकातारकनायकोज्वलमुखीं श्रीकामकाम्यप्रदां
शोकारण्यधनञ्जयप्रतिनिभां कोपाटवीचन्द्रिकाम् ।
श्रीकान्तादिसुरार्चितां स्त्रियमिमां लोकावलीनाशिनीं
लोकानन्दकरीं नमामि शिरसा ध्यायामि मूकाम्बिकाम् ॥ ९॥

काञ्चीकिङ्किणिकङ्कणाञ्चितकरां मञ्जीरहारोज्वलां
चञ्चत्काञ्चनकिरीटकटिदामाश्लेषभूषोज्ज्वलाम् ।
किञ्चित्काञ्चनकञ्चुके मणिमये पद्मासने संस्थितां
पञ्चाद्यञ्चितसञ्चरीं भगवतीं ध्यायामि मूकाम्बिकाम् ॥ १०॥

सौवर्णाम्बुजमध्यकाञ्चिनयनां सौदामिनीसन्निभां
शङ्खंचक्रवराभयानि दधतीं इन्दोः कलां बिभ्रतीम् ।
ग्रीवेयासक्तहारकुण्डलधरां आखण्डलादिस्तुतां मायां
विन्ध्यनिवासिनीं भगवतीं ध्यायामि मूकाम्बिकाम् ॥ ११॥

श्रीमन्विभवेन सुरैर्मुनिगणैरप्सरोपास्य सेव्यां
मन्त्रारादिसमस्तदेववनितैः संशोभमानां शिवाम् ।
सौवर्णाम्बुजधारिणीं त्रिनयनां मोहादि कामेश्वरीं
मूकाम्बां सकलेशसिद्धिवरदां वन्दे परां देवताम् ॥ १२॥

इति श्रीमूकाम्बिकास्तोत्रम् सम्पूर्णम् ॥